16.2 / 3

# सागरिका

पञ्चविंशे वर्षे

प्रथमोऽङ्कः

विक्रमसंवत्सरे २०४३

सम्पादकः

डा० रामजी उपाध्यायः
प्रो० राधावल्लभ त्रिपाठी
प्रो० रेवाप्रसाद द्विवेदी
डा०रामगोपाल मिश्रः

प्रकाशिका

सागरिका-समितिः

महामनापुरी

वाराणसी-५ ( B. H. U. )

# भाषाविज्ञाने नवशोधापेक्षाः

डा० सुद्युम्नाचार्यः

इदं हि नो गौरवास्पदं यदस्मद्देशे मननात्मकानां मन्त्राणां सुरक्षायै प्रत्नादेव कालात् भाषाविज्ञानं दृढभूमिर्बभूव। नामरूपात्मके जगति वाङ्मयाभिधं नामैवास्मद्देशे संगोपितं बभूव, रूपन्तु सर्वैरन्यैर्देशैः। अयं हि देववाण्याः संरक्षणे महानाग्रहो यत् प्रतियुगं परस्सहस्राणामनूचानानामस्मिन् कार्ये पुरुषायुषं व्यत्यायने न मनागप्यखिद्यत चेतः। अत इदं नातिचित्रं यन्मूलतो देववाण्या संरक्षणे व्याकरणं, भाषाविज्ञानञ्च प्रथितं लोके।

एतन्मूलकस्सङ्केतो वैदिकसाहित्येष्वेव समुपलभ्यते। यथा ब्राह्मणग्रन्थे—'वाग्वै पराच्यव्याकृतावादत्ते। देवा इन्द्रमब्रुवन्निमां नो वाचं व्याकुर्विति। सोऽब्रवीद् वरं वृणै।" देववाणीं व्याकुर्वाणा प्रातिशाख्यादयः पाणिनेर्व्याकरणादीनि चामुमेवार्थं जुषन्ते।

कं न चित्रयतीदं ख्यातं तथ्यं यत् प्रकृतिप्रत्ययादिपुरःसरा सब्दान्वाख्यानपद्धतिरद्यापि वैयाकरणनिकाये आधुनिकभाषावैज्ञानिकेषु च सन्तायते। अद्यत्वे Morphology इति नामधेयेन प्रथिता सरणिस्सर्वाऽप्यत्र प्रथितैव। यौगिकार्थावबोधने शब्दार्थविकासपरिज्ञाने न काचनान्या सरणिरेनां प्रतिस्पर्धते।

परमद्यापि भाषाविज्ञानं लब्धवर्णानां मनुजानां प्रयत्नं प्रतीक्षते। पाणिन्यादित प्रवर्तमानं व्याकरणं कामं वर्णनात्मकं भाषाविज्ञानं व्याचष्टे, परं न तथा तुलनात्मकं भाषाविज्ञानम्। देववाण्या संस्कृतभाषैवोत्तराधिकारिणीति मतिः प्राकृतादिक प्रति न्यमीलयच्चक्षुषीपारेदृश्वनां वैयाकरणानाम्। संस्कृतं ब्रुवाणाः शिष्टाः प्राकृतादिकन्तु भाषमाणाः ग्राम्या असभ्याश्चेति मतिः कथन्तेषां व्याकरणं समेधयेत्। परमद्यतनीना सरणिर्यत् 'न कोऽपि प्राकृतं भाषते' इत्यत एवाशिष्टेन तेन भाव्यम्। प्राकृतादयस्सर्वा अपि भाषा शेवधिरास्माकीन इत्यस्ता अपि महार्हाणि रत्नानि रक्षन्ति अतो 'न ता रक्ष्या' इति न कदापि समीचीयं मतिः।

प्राकृतादिभाषातस्सम्भूता 'बोली' पदेन व्यवहृता अद्यतना भाषा अपि सर्वथाऽनुसन्धेया। साम्प्रतं प्राकृतादिभाषासु यावत् कार्यं सम्पन्नं, न तावदपि बोलीभाषासु, सम्पन्नम्। अतो भोजपुरी, ब्रज, अवधी आदि सर्वासामपि व्युत्पत्तिमूलकस्तुलनात्मकश्च कोशोऽपेक्षितः। किमुमापि संशीतिर्यत् बोलीशब्देषु मनुजानाममूल्या विचारसम्पत्तिस्सङ्गोपिता वर्तते। तद्भाषाविज्ञानकुंचिकयैवोद्घाटितुं शक्यते।

संस्कृतशब्दानां परिज्ञानेऽपि विलुप्तशब्दसम्पत्त्यवगमेऽपि च विलक्षिमं कार्यं कर्तुं प्रभवन्तीमा प्राकृतादिभाषा। आधुनिकभाषाविज्ञाने शब्दानां पुनर्निर्माण (Re-construction) रूपेण याऽसौ नूतना शाखा प्रचलिता तस्या इमा भाषा एव मूलम्। प्राचीन संस्कृतसाहित्येनास्माभिः प्राक्तनाः संस्कृत शब्दाः परिज्ञायन्ते। परं तेषु साहित्येषु अकारादिहकारान्ताः सर्वेऽपि संस्कृतशब्दाः परिगणिता किम्? स्पष्टतो नेत्येवास्योत्तरम्। न किमपि साहित्यं शब्दकोशरूपेण प्रतिज्ञातं, यत्रैकैकश्शब्दस्सुप्रतरां परिगणितः स्यात्। अतस्तेषामविज्ञातशब्दानामवगमाय प्राकृतादिभाषा इमाः कल्पन्ते। तुलनात्मकभाषाविज्ञानपद्धत्या नान्यतोऽवगम्याः सहस्रशस्संस्कृतशब्दाः परिज्ञातुं शक्यन्ते।

विषयेऽस्मिन्निदर्शनानि कानिचन प्रस्तोतुं शक्यन्ते। प्रातः शब्दार्थे 'प्रगे' प्रभातादयः शब्दाः प्रचलन्ति संस्कृते। तिष्ठद्गवादयः कतिपये शब्दा अपि नाविज्ञाताः पाणिनीये व्याकरणे। परं नेमे शब्दाः लोके विसृमरतां प्राप्ताः। यतो ह्यद्यत्वे बोलीभाषासु प्रातः शब्दार्थे सवेरा, 'सकारे, बिहानं' आदि शब्दाः समुपलभ्यन्ते। शब्दैरेतैः संस्कृते 'सुवेलम्, सुकालम्, विभानम्' इत्येते शब्दाः यथातथं पुनर्निर्मातुं शक्यन्ते। एतेन सहजमिदमनुमीयते यन्महति समाजे एते शब्दा प्रियङ्करणाः समभूवन्। साहित्ये प्रायशोऽज्ञाता अप्येते शब्दाः विधिनानेन परिज्ञेयाः।

एवं संस्कृते प्रातर्भोजनार्थे 'प्रातराश' शब्दः प्रयुज्यते। परं लोके तु 'कल्यवर्त' शब्दोऽस्मिन्नर्थे प्रसृमरत्वमवाप्नोत्। अद्यत्वे बोलीभाषासु सुप्रयुक्तः 'कलेवा' शब्दोऽस्मिन्न ज्ञापकः।

एवं प्रातःशब्दार्थे 'कल्य' शब्दोऽपि प्रयुज्यते लोके। परं लोके श्वस्तने प्रातः शब्दार्थे शब्दोऽयं प्रायशोऽकल्पत। हेयं दुखमनागतमिव अनागतमागामि सुखमेव परमाशास्यमासीत् सामाजिकानाम्। अतः श्वःशब्दार्थे 'कल' शब्दाः प्रचारमाप बोलीभाषासु।

एवं संख्यातिगा नामधातवोऽपि वाचमारूढाः समभूवन् सामाजिकानाम् कण्ड्वादिधातवस्तु स्थाल्यां पुलाक इव तेषामुदाहरणमात्रम्। अन्यान् संस्कृतनामधातून् कथं ज्ञातुं पारयामहे वयम्? निश्प्रपञ्चमाधुनिकभाषावैज्ञानिकरीत्या शब्दानं पुनर्निर्माणेनैव।

एवं हिन्दी भाषायां 'चकराना' शब्देन 'चक्रयति' शब्दः, 'उजड़ना' शब्देन च 'उज्जडयति' शब्दोऽवितथमनुमातुं पार्यते। 'महकना' शब्देनेदम-

नुमीयते यत्र गन्धसामान्यमपितु पुष्पविशेषस्य 'मद्यस्य' गन्धः प्रचारमाससाद लोके। अतः संस्कृते 'मद्यगन्धयति' शब्दस्य प्रयोगो न दुर्वार आसीत्। एतेनैव 'महकना' शब्द प्रायुज्यत लोके।

बघेली भाषायां शीघ्रार्थे 'हरबियाना' शब्देन संस्कृतः 'सरभस' शब्दो नामधातुरूपेण सुप्रयुक्त आसीदित्यवितथमवगम्यते।

एवमद्यत्वे प्रयुक्तानां बोलीभाषाणां तुलनात्मकेन भाषावैज्ञानिकाध्ययनेन प्रश्ना अपि कतिपया समाधातुं शक्यन्ते Meaning of the meaning पुस्तके विश्रुतनाम्ना लेखकेन भणितं यच्चित्रमिदं यत् हिन्दीभाषायां विरोधिशब्दाः प्रयुज्यन्ते। यथा तत्र 'आजाना' आगया' इत्यादिशब्देषु आगमनार्थे 'आ' शब्दः, गमनार्थे च 'जाना' अथवा 'गया' शब्दः एकत्र प्रयुज्यते। न तेनास्य कारणमलम्भि।

परं बोलीभाषाणां संस्कृतादिभाषाभिः तुलनया सर्वथा समाधेयोऽयं प्रश्नः। वस्तुतो हिन्दीभाषायाम् 'आ जाना' शब्दः आयातिशब्देन' 'आ गया' शब्दश्च 'आगत' शब्देन विनिर्मितः। संस्कृते 'आयाति। शब्दः पूर्ण आगमनार्थे प्रयुज्यते। परं हिन्दीभाषायां केवलमुपसर्गरूप 'आ' इत्येषः [illegible]रूपेण 'आता है. आदिषु प्रयुक्तो बभूव। परम् 'आ जाता है' इत्य[illegible]मुपसर्गरूपेणैव प्रयुक्तः। एवं निश्चीयते यत् संस्कृतभाषायां वर्तमान-'आ' उपसर्गः हिन्दीभाषायां क्वचनापसर्गरूपेण क्वचन क्रियारूपेण प्रयुक्तः। एवं 'आ जाता है।' इत्यत्र 'आ' शब्दो न क्रियार्थकः अपितु 'आयाति' शब्दवत् सर्वोऽपि शब्द आगमनार्थकः। एतेन स्पष्टं विरोधनिमित्तमुद्घाटितं भवति।

एतेन सिद्धं यत् बोलीभाषा तुलनात्मकाधुनिकदृष्ट्या परमनुसन्धेया। एता भाषा विदुषां महान्तं प्रयत्नमुत्कं प्रतीक्षन्ते।

विदेशेषु सर्वा अपि बोली भाषा अनुसन्धानपरिधौ संगृहीताः। परं भाषाविज्ञानक्षेत्रेषु सुप्रथितेऽस्मद्देशे न तथा इति नैतच्चित्रं किम्?

अतः सुष्ठूच्यते —भाषाविज्ञानक्षेत्रेषु नवशोधः परमपेक्ष्यते इति॥

टाउन स्नातकोत्तर महाविद्यालय,
बलिया।